॥ सावित्र्युपनिषत् ॥

सावित्र्युपनिषद्वेद्यचित्सावित्रपदोज्ज्वलम् ।
प्रतियोगिविनिर्मुक्तं रामचन्द्रपदं भजे ॥

सावित्र्यात्मा पाशुपतं परं ब्रह्मावधूतकम् ।
त्रिपुरातपनं देवीत्रिपुरा कठभावना ॥

ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च । सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु । तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ ॥

कः सविता का सावित्री अग्निरेव सविता पृथिवी सावित्री स यत्राग्निस्तत्पृथिवी यत्र वै पृथिवी तत्राग्निस्ते द्वे योनी तदेकं मिथुनम् ॥ १॥

कः सविता का सवित्री वरुण एव सवितापः सावित्री स यत्र वरुणस्तदापो यत्र वा आपस्तद्वरुणस्ते द्वे योनिस्तदेकं मिथुनम् ॥ २॥

कः सविता का सावित्री वायुरेव सविताकाशः सावित्री स यत्र वायुस्तदाकाशो यत्र वा आकाशस्तद्वायुस्ते द्वे योनिस्तदेकं मिथुनम् ॥ ३॥

कः सविता का सावित्री यज्ञ एव सविता छन्दांसि सावित्री स यत्र यज्ञस्तत्र छन्दांसि यत्र वा छन्दांसि स यज्ञस्ते द्वे योनिस्तदेकं मिथुनम् ॥ ४॥

कः सविता का सावित्री स्तनयित्नुरेव सविता विद्युत्सावित्री स यत्र स्तनयित्नुस्तद्विद्युत् यत्र वा विद्युत्तत्र स्तनयित्नुस्ते द्वे योनिस्तदेकं मिथुनम् ॥ ५॥

कः सविता का सावित्री आदित्य एव सविता द्यौः सावित्री स यत्रादित्यस्तद्द्यौर्यत्र वा द्यौस्तदादित्यस्ते द्वे योनिस्तदेकं मिथुनम् ॥ ६॥

कः सविता का सावित्री चन्द्र एव सविता नक्षत्राणि सावित्री स यत्र चन्द्रस्तन्नक्षत्राणि यत्र वा नक्षत्राणे स चन्द्रमास्ते द्वे योनिस्तदेकं मिथुनम् ॥ ७॥

कः सविता का सावित्री मन एव सविता वाक् सावित्री स यत्र वा मनस्तद्वाक् यत्र वा वाक् तन्मनस्ते द्वे योनिस्तदेकं मिथुनम् ॥ ८॥

कः सविता का सावित्री पुरुष एव सविता स्त्री सावित्री स यत्र पुरुषस्तत्स्त्री यत्र वा स्त्री स पुरुषस्ते द्वे योनिस्तदेकं मिथुनम् ॥ ९॥

सावित्र्याः पादत्रयम्
तस्या एव (एष) प्रथमः पादो भूस्तत्सवितुर्वरेण्यमित्यग्निर्वै वरेण्यमापो वरेण्यं चन्द्रमा वरेण्यम् ॥ १०॥

तस्या एव (एष) द्वितीयः
पादो भर्गमयोऽपि भुवो भर्गो देवस्य धीमहीत्यग्निर्वै भर्ग आदित्यो वै भर्गश्चन्द्रमा वै भर्गः ॥ ११॥

तस्या एष तृतीयः पादः स्वर्धियो यो नः प्रचोदयादिति स्त्री चैव पुरुषश्च प्रजनयतः ॥ १२॥

सावित्रीवेदनफलं पुनर्मृत्युञ्जयः
यो वा एतां सावित्रीमेवं वेद स पुनर्मृत्युं जयति ॥ १३॥

बलातिबलयोर्विराट् पुरुष ऋषिः । गायत्री छन्दः ।
गायत्री देवता । अकारोकारमकारा बीजाद्याः ।
क्षुधाऽऽदिनिरसने विनियोगः । क्लामित्यादिषडङ्गम् (षडङ्गन्यासः) ।
ध्यानम् ।
अमृतकरतलाग्रौ (तलार्द्रौ) सर्वसंजीवनाढ्या-
वघहरणसुदक्षौ वेदसारे मयूखे ।
प्रणवमयविकारौ भास्कराकारदेहौ
सततमनूभवेऽहं तौ बलातिबलान्तौ ॥ var बलाती

ॐ ह्रीं बले महादेवि ह्रीं महाबले क्लीं
चतुर्विधपुरुषार्थसिद्धिप्रदे तत्सवितुर्वरदात्मिके
ह्रीं वरेण्यं भर्गो देवस्य वरदात्मिके अतिबले सर्वदयामूर्ते
बले सर्वक्षुच्छ्रमोपनाशिनि धीमहि धियो यो नर्जाते प्रचुर्या
(var  बले सर्वक्षुद्भ्रमोपनाशिनि धीमहि धियो यो नर्जाते प्रचुर्यः)
या प्रचोदयादात्मिके प्रणवशिरस्कात्मिके हुं फट् स्वाहा ॥ १४॥

विद्याफलम्
एवं विद्वान् कृतकृत्यो भवति सावित्र्या एव सलोकतां
जयतीत्युपनिषत् ॥ १५॥

ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो
बलमिन्द्रियाणि च । सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म
निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं
मेऽस्तु । तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि
सन्तु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ तत्सत् ॥

इति सावित्र्युपनिषत्समाप्ता ॥